एसाजीः—विक्रमैकरसा हि तेजस्विनामुपक्रमाः ।

तानाजीः—ततश्च स्वामिप्रवृत्तिमुपलभ्य यवनवेशधरः सोऽति-क्रम्यारातिसेनानिवेशं लोहगडदुर्गावस्थितेन स्वामिना समगंस्ताभयञ्च सद्य एव स्वामिनो विश्रम्भभाजनम् सम्प्रति खलु द्वित्राण्यहानि तेन सह किमपि मन्त्रयमाणस्तस्मिन्नेव तिष्ठतेऽस्मन्महाराजः ।

एसाजीः—दिष्ट्या प्रतिक्षणमेधते स्वामिनः प्रभावः ।

तानाजीः—(ऊर्ध्वं विलोक्य) अहो प्रभाता रजनी । साधयाम-स्तावच्छस्त्रास्त्रपरिचयं कारयितुं नवसैनिकान् ।

एसाजीः—तथा । (इति निष्क्रान्तौ)

इति विष्कम्भकः

---

(ततः प्रविशति तोरणदुर्गोपवनस्थितः शिवराजः)

शिवराजः—अहो,

---

एसाजी—तेजस्वी जन का कार्य विक्रम ही से प्रारम्भ होता है ।

तानाजी—उसके बाद स्वामी का समाचार मालूम होने पर यह यवनवेश में शत्रु-शिविर पारकर लोहगडदुर्ग में स्वामी से भेंट की, शीघ्र ही उनका विश्वासी बना । इस समय दो अथवा तीन दिनों से उसी के साथ कुछ मन्त्रणा करते हुए महाराज दुर्ग में स्थित हैं ।

एसाजी—भाग्य से स्वामी का प्रभाव क्षण-प्रतिक्षण बढ़ रहा है ।

तानाजी—(ऊपर देखकर) ओह, प्रभात हो गया । चलो नये सैनिकों को शस्त्रास्त्र का परिचय करायें ।

एसाजी—ठीक है । (दोनों चले जाते हैं)

विष्कम्भक समाप्त

---

(इसके बाद तोरणदुर्ग के उपवन में शिवराज खड़े हैं ।)

शिवराज—अहो,

अपास्य दूरं मलिना तमस्विनीं, क्षणेन तिर्यक् प्रसृतैर्नवांशुभिः
लताप्रतानाम्रनिकुञ्जमण्डिता; दिवाकरेणारुणिता वनस्थली ॥ २

तथैव स्वातंत्र्यसूर्येणापि रञ्जितानि सह्याचल निवासिना मावल-जनाना मनांसि । संप्रति तेषां चत्वारिंशत्सहस्राणि प्रविविक्षन्ति मम सेना निवहम् । किन्त्वल्पधनो नोत्सहे तान्विनियोक्तुम् । अपि च द्वीपान्तरादभ्यागतं संप्राप्तं महान्तं शस्त्रास्त्रायुधसंचयं सार्धलक्षेणाऽपि क्रेतुं प्रार्थयते मां फिरङ्गी वणिक्पतिः । यदृच्छयोपेतोऽयमवसरो मया कथं गृहीतव्यः । अहो

स्वातंत्र्यवह्निज्वलितः समन्ततः, सह्याचलो मोदयते मनो मे ।
वनेचरान् सैन्यगणे नियोक्तुं; न चास्म्यलं तां नितरां धुनोति ॥ ३

(पुरतो विलोक्य) एष गृहीतसंकेतो चीर इत एवाभिसर्पति ।

---

सूर्य ने अपनी तिरछी किरणों के प्रसार से क्षणमात्र में ही रात्रि के मलिन अन्धकार को दूर करके लता, आम्रमञ्जरी और निकुंज से विभूषित वनस्थली को रंजित कर दिया । २

उसी प्रकार स्वातंत्र्य सूर्य द्वारा सह्याद्रि निवासी मावलों का हृदय हर्षित हो उठा है, सम्प्रति उनमें से चालीस हजार जन मेरी सेना में सम्मिलित होना चाह रहे हैं । परन्तु धनाभाव के कारण उन्हें नियुक्त करने का साहस नहीं हो रहा है । और दूसरी ओर द्वीपान्तर (विदेश) से आगत फिरंगी वणिकराज डेढ़ लाख रुपयों में अनेकानेक महान् शस्त्रास्त्र क्रय करने के लिए निवेदन कर रहा है । मैं इस शुभ अवसर का कैसे लाभ उठाऊँ ? अहो—

स्वतन्त्रता की अग्नि से प्रदीप्त सह्याद्रि निवासियों का हृदय, (सह्याद्रिवासी जिनका हृदय स्वातंत्र्य प्रकाश से चमक उठा है) मेरे मन को एक ओर हर्षित कर रहा है, दूसरी ओर मावलों को अपनी सेना में सम्मिलित करने की मेरी असमर्थता मुझे सन्तप्त कर रही है ।

(सामने देखकर) संकेतानुसार यह चीर यहीं आ रहा है ।

नेताजीः—(प्रविश्य) विजयतां देवः ।

शिवराजः—अपि चिन्तितस्त्वया दुर्गसंतरणोपायः ।

नेताजीः—प्रथमं तावदादिशतु देवो मां राजमाचीदुर्गं प्रस्थातुम् । अल्पैरपि भटैरहं नाशयिष्यामि तद्दुर्गावरोधकगणम् ।

शिवराजः—वीर संप्रति तु कथमपि शस्त्रास्त्रपरिक्रयेणाधिष्ठानबलं संनाह्य तदजय्यं विधातुं स्वायत्तीकृतानां च दुर्गाणां प्राकारपरिखादिभिर्दुष्प्रधर्षत्वमापादयितुमतीवोत्कण्ठितोऽस्मि ।

नेताजीः—देव युगपत्समुपस्थितानां व्यवसायानां क्रमेणैवोपपन्नो विनियोगः । तत्पूर्वं राजमाचीरक्षण एव तावदात्मानमभिनिवेशयतु देवः । एवमुत्तरोत्तरविजयेन भविष्यति देवस्य साम्राज्यसिद्धिः ।

---

नेताजी—(पहुँचकर) विजय हो देव ।

शिवराज—क्या तुमने दुर्ग को विजय करने का उपाय सोचा ?

नेताजी—देव । पहले मुझे राजमाचीदुर्ग की ओर प्रस्थित होने का आदेश दें । कुछ ही सैनिकों की सहायता से दुर्ग के अवरोधकों को नष्ट कर लूंगा ।

शिवराज—वीर सम्प्रति तो मैं येनकेन प्रकारेण अपनी वर्तमान सैन्य-शक्ति को सुदृढ़ और शस्त्रास्त्र क्रय कर उसे दुर्जेय बनाने के लिए अत्यन्त उत्सुक हूँ। और अपने अधिकार में आये हुए दुर्गों को चहारदीवारी और खाई आदि के निर्माण द्वारा दुर्लंघनीय बनाना चाहता हूँ ।

नेताजी—देव, समुपस्थित कार्यों को एक एक करके सम्पन्न करना ही उचित है । पहले राजमाचीदुर्ग की रक्षा का उपाय करने की ओर ध्यान दें । इस प्रकार उत्तरोत्तर विजय द्वारा आप एक साम्राज्य स्थापित कर लेंगे ।

शिवराज—(निःश्वस्य) सर्वथा साधनविकलस्य कुतो मे साम्राज्यसंस्थापनसौभाग्यम्। यतः

विना भृतिं भृत्यगणाः प्रिया मे विनाऽभिभित्ति प्रवराश्च दुर्गाः।
विना बलं मे प्रबलोऽन्तरात्मा सर्वेऽवसीदन्ति सह प्रवीर ॥४

केवलमिदानीमवशिष्यते परमं विधेयम्। त्वया सह भवानीमन्दिरमुपाश्रित्याभीष्टं सम्प्रार्थयितुमद्य प्रातरादिष्टोऽस्म्यहं भगवत्या परदेवतया। यदि तत्रापि मे भाग्यविप्लवस्तदानीं तु

त्वय्येव वीरावसरे समग्रां निधाय राष्ट्रोद्धरणप्रवृत्तिम्।
अकिंचनो दण्डकपालपाणिः परिव्रजिष्यामि परात्मनिष्ठः ॥ ५

नेताजी—देव धर्मराज्यसंस्थापनोद्धृत कृपाणस्य तवास्मात् पुवाप निर्वेद। यत

---

शिवराज—(निःश्वास छोड़कर) सर्वथा साधनरहित मुझे साम्राज्य स्थापित करने का सौभाग्य कहाँ? क्योंकि मेरे सेवक वृत्ति-(वेतन) के अभाव में, अच्छे अच्छे दुर्ग चहारदीवारी न होने के कारण और शक्ति (सैनिक शक्ति) के अभाव में मेरी प्रबल अन्तरात्मा ये सब एक साथ ही भग्न हो रहे हैं। ४

अब एक मात्र करणीय कार्य यह है कि तुम्हारे साथ मैं आज ही प्रातःकाल भवानी के मन्दिर में जाकर अपने अभीष्ट की याचना करूँ, जैसा कि परमशक्ति भगवती का आदेश है। यदि वहाँ भी भाग्य ने साथ छोड़ा फिर तो—

समस्त राष्ट्र के उद्धार का कार्य वीरवरों तुम्हारे ही ऊपर छोड़ मैं सर्वथाकिंचन, आत्मनिष्ठ होकर दण्ड और कपाल ले संन्यासी बनकर विचरण करूँगा। ५

नेताजी—धर्मराज्य की स्थापना के लिए कृपाण धारण करने वाले आपके लिए यह चिन्ता का विषय है ही। तथापि कठिनाई

अन्तरायनिकषैः परीक्षिताः, प्राप्नुवन्ति मनुजा महत्पदम् ।
विघ्नविकलधियो निरत्यया, हेलयापि निपतन्त्यधीश्वराः ॥ ६

तद् धैर्यमवलम्ब्य साम्राज्यसंपादनार्थं बद्धपरिकरो भव । तवानुशासनपरेणैव मया वर्तितव्यमित्यादिष्टोऽस्मि भगवता सिद्धतापसेन । न चैतदन्यथा भवितुमर्हति । तद्

अनन्यभावः परदेवतायां, मनः समाधाय लभस्व वाञ्छितम् ।
किमाश्रितः कल्पतरुं कदाचिन्निवर्ततेकोऽप्यनवाप्त कामः ॥ ७

शिवराजः—वीर सम्यगनुबोधितोऽस्मि ।

अङ्गरक्षकः—(प्रविश्य) आज्ञापयतु देवः ।

शिवराजः—भवानीमन्दिरमार्गमादेशय ।

अङ्गरक्षकः—इत इतो देवः । (सर्वे परिक्रामन्ति) एतन्मन्दिरद्वारं तत्प्रविशतु देवः । (इति निष्क्रान्तः)

---

(बाधाएँ) रूपी कसौटी पर खरे उतरने के पश्चात् मनुष्य महान् पद प्राप्त करता है, विघ्न से शीघ्र व्याकुल होनेवाला सम्राट् भी सरलता से निम्न पद को प्राप्त हो जाता है । ६

इसलिए धैर्य धारण करके साम्राज्य स्थापित करने के लिए कटिबद्ध हो जायें । मुझे सिद्धतपस्वी का आदेश हुआ है कि मैं आपके आदेशानुसार कार्य करूँ । यह कभी अन्यथा नहीं हो सकता । अतः परमशक्तिमान् में अनन्य भाव से हृदय को केन्द्रित करके अभीष्ट की पूर्ति करें, क्या कल्पतरु के आश्रित रहकर भी कोई असफल मनोरथ रहा है । ७

शिवराज—वीर, तू ने उचित स्मरण दिलाया । कौन है यहाँ ?

अङ्गरक्षक—(प्रवेशकर) आदेश करें देव ।

शिवराज—भवानी-मन्दिर के मार्ग का निर्देश करो ।

अङ्गरक्षक—इधर से, इस ओर से देव (सभी घूमकर चलते हैं) यह है मन्दिर का द्वार, चलें देव । (चला जाता है)

शिवराजः—वीर अत्र स्थित्वा मां प्रतिपालय । यावदहं भगवती-
माराध्य प्रत्यावर्ते ।

नेताजी.—तथा (इति द्वारदेशमधितिष्ठति)

शिवराजः—(मन्दिरं प्रविश्य शम्भु साष्टाङ्गं प्रणिपत्य स्तौति)

(कर्णाटरागेण त्रितालेन गीयते)

तारय तव सुतमम्ब ! भवानि !!

प्रबलयवनरिपुगलितविभायम् ।
प्रलयपयोनिधिविसुसितनायम्;
पालय परममुडानि ॥तारय० ॥ १

त्रिभुवनभुवने धनुते तव वास,
त्रिजगपरमा हृतदिव्यविलासः ।
तारय मम विपमाणि ॥तारय०॥ २

त्वमसि ममैक परम शरणम् ।
त्वरयसि यदि रिपुमायोद्धरणम् ।
तारय विघ्नशतानि ॥ तारय० ३

---

वितरसि यदि नहि करुणालेशम् ।
भूत्वा ममाटनं प्रतिवेशम् ।
निश्चितमपि शर्वाणि ! ॥ सारथ० ॥ ४

(आकाशे)

मा शुचः सहायसाध्यास्ते सिद्धयः ।

शिवराजः—(आकर्ण्य) शरणागतवत्सले त्वदनुग्रहपरवशा एव मे प्रार्थितसिद्धयः । (प्रणम्य द्वारदेशमुपसृत्य) वीर त्वदधीना मे सिद्धयः इति भगवत्या आदेशः । सम्प्रत्यङ्गरक्षकबलेनाक्रम्य बीजापुर प्रदेशा-माहरापेक्षितं हिरण्यसंचयम् ।

नेताजीः—देव पुरोवर्तिजीर्णदेवालयकोणप्रस्तरप्रच्छन्नो महान् निधिरस्त्यत्रोत्खातव्य इति मम पुनरान्तरः प्रत्ययः ।

शिवराजः—न मृषा भवितुमर्हति तथायं प्रतिभासः । यतः

---

हे शर्वाणि ! यदि तुम अपनी करुणा-दृष्टि मेरे ऊपर नहीं डालती तो निश्चित है कि मैं प्रतिवेश में भ्रमण करूँगा ।४

(आकाशवाणी) निराश न हो, सहायकों द्वारा अभीष्ट सिद्ध होगा ।

शिवराज—(सुनकर) हे शरणागतवत्सले । तुम्हारे अनुग्रह पर ही मेरे कार्य की सिद्धि निर्भर है । (प्रणाम कर, द्वार पर पहुँच) वीर, भगवती का आदेश है कि मेरे कार्य की सिद्धि तुम्हारे अधीन है । अतः मेरे अंगरक्षक के साथ बीजापुर पर आक्रमण करके अपेक्षित धन आदि एकत्र करो ।

नेताजी—देव, सामने स्थित जीर्ण मन्दिर के कोने में खोदवाएं तो प्रस्तर से ढकी हुई विशाल धनराशि प्राप्त होगी, यह मेरा गहरा विश्वास है ।

शिवराज—तुम्हारा दृष्टिकोण असत्य नहीं हो सकता । क्योंकि

संयतेन्द्रियमनाः प्रसन्नधीः, प्रत्यगात्मनि च यः समाहितः ।
तस्य यत्स्फुरति भाविदर्शनं नैव तद्भवति संशयास्पदम् ॥८

कः कोऽत्र भोः ।

अङ्गरक्षकः—(प्रविश्य) आज्ञापयतु देवः ।

शिवराजः—शिल्पिमुख्यं द्रष्टुमिच्छामि ।

अङ्गरक्षकः—तथा । (इति निष्क्रान्तः)

शिवराजः—वीर मायेरानयतीन्द्रवचसा खलु प्रोत्साहितोऽस्मि ।

शिल्पिमुख्यः—(प्रविश्य) विजयतां देव ।

शिवराजः—(जीर्णदेवालयं निर्दिश्य) तत्र खनित्वा यदुपलभ्येत तत्सत्वरमिहोहर ।

शिल्पिमुख्यः—तथा । (इति खनित्वा भाण्डान्याहृत्य) दिष्ट्याऽधिगतान्येतानि द्रव्यपूर्णानि भाण्डानि निखातभूमिविवरात् । (इति स्थापयति)

---

संयतेन्द्रिय, स्थिर और प्रसन्नचित्तवाले व्यक्ति के मन में भविष्य ज्ञान प्रतिभासित होता है, वह सन्देहास्पद नहीं हो सकता । ८

कौन, कोई है ।

अङ्गरक्षक—(पहुँचकर) आज्ञा देव ।

शिवराज—प्रमुख शिल्पी को देखना चाहता हूँ ।

अङ्गरक्षक—जैसी आज्ञा । (कहकर जाता है)

शिवराज—वीर, मैं वस्तुतः मायेरान के यतीन्द्र-वचनों से ही प्रोत्साहित हुआ हूँ ।

मुख्यशिल्पी—(पहुँचकर) देव की विजय हो ।

शिवराज—(जीर्ण देवालय की ओर संकेत करके) वहाँ खोदकर जो कुछ भी प्राप्त करो तुरन्त ले आओ ।

मुख्यशिल्पी—जो आज्ञा । (खोदकर भाण्डों को लेकर आता है) भाग्यवशात् खोदी हुई धरती से द्रव्यों से पूर्ण ये भाण्ड प्राप्त हुए हैं । (रख देता है) ।

एसाजी:—अहो दैवं सर्वथाऽनुकूलमिति तर्कये ।

तानाजी:—एवमेतत् । अन्यथा कथं नेताजी सदृशाः प्रवीराः परोक्षेऽपि स्वामिकार्यं साधयेयुः ।

एसाजी:—(सविस्मयम्) अये किमुच्यते । नेताजी तु यवनसैनिकैर्निहत इति लोकप्रसिद्धिः ।

तानाजी:—तं रणपतितचेतनं मत्वा परावृत्ते यवनसैनिकगणे प्रकृतिमापन्नः स प्रच्छन्नमुपेत्य मायेरानयतीन्द्रं तदधिगतशस्त्रास्त्रप्रयोगकौशलस्तदादेशानुरोधेन साम्राज्यसंस्थापनोद्यतं स्वामिनमन्वेष्टुं यतिच्छद्मना राजमाचीदुर्गं प्रतिष्ठत । मार्गे च तद् दुर्गमवरोद्धुं नियुक्तस्य बीजापुरसैन्यस्य नायकं बन्दीकृत्य

यतिवसनधरो दृढायताङ्गः, प्रबलरुषाज्वलितः सकुन्तपाणिः ।
नियमितयवनेशसादियुक्तः; सरभसमेत्य विवेश राजदुर्गम् ॥ ९

---

एसाजी—अहो, फिर तो दैव सर्वथा अनुकूल है ।

तानाजी—हाँ, अन्यथा कैसे नेताजी सदृश वीर स्वामी के कार्य को गुप्तरूप से रहकर भी संपादित करते ।

एसाजी—(विस्मय से) अरे क्या कहते हो ? नेताजी तो यवन सैनिकों द्वारा मारे जा चुके, ऐसी प्रसिद्धि है ।

तानाजी—यवन सैनिकों ने उसे मृत जानकर छोड़ दिया, उनके जाने के पश्चात् जब वह चैतन्य हुआ तो प्रच्छन्नरूप से मायेरान-यती के पास पहुँचा, उनसे शस्त्रास्त्र विद्या में कुशलता प्राप्त की और उनके आदेशानुसार साम्राज्यसंस्थापनार्थ उद्यत स्वामी को यती के वेश में ढूँढने के लिए राजमाची दुर्ग में स्थित हो गया । मार्ग में उस दुर्ग को आक्रान्त करने के लिए नियुक्त बीजापुर सैनिकों के सेनापति को बन्दी बनाकर—

यतिवेश धारण किये हुए, पुष्ट शरीर क्रोध एवं तेज के कारण भयानक, हाथ में भाला लिए, यवनेश-सैनिक (अश्वारोही) से सेवित वह बलपूर्वक राजमाचीदुर्ग में प्रविष्ट हुआ । ९

# छत्रपतिसाम्राज्यम्

## प्रथमोऽङ्कः

उत्तुङ्गं सुरनिम्नगावलयितं नानामृगैः सङ्कुलं,
सञ्चारन्मृगयुर्द्रुतं हिमवतः शृङ्गान्तरे शृङ्गतः ।
सानन्दं विजयाय सत्त्वविजितो दिव्यं निजास्त्रं दिशन्
युष्मानेष पिनाकपाणिरवताल्लीलाकिरातः शिवः ॥ १

---

उत्तुङ्गमिति—एष, पिनाक, पिनाकाख्यं धनुः पाणौ यस्य स पिनाकपाणिः लीलयाकिरातः, लीलाकिरातः, मृगान् यातीति मृगयुः शिवः उत्तुङ्गं, उच्चं, सुरनिम्नगावलयितं, सुरापगापरिवृतं नानामृगैः सङ्कुलं व्याप्तं, हिमवतः हिमालयस्य शृङ्गतः शिखरात् अन्यत् शृङ्गं, शृङ्गान्तरं, द्रुतं, क्षिप्रं, सत्त्वेन, बलोत्कर्षेण विजितः प्रसान्नितहृदयः, अर्जुनाय, पार्थपुत्राय सानन्दं दिव्यं निजास्त्रं पाशुपतास्त्रं दिशन्, उपदिशन् युष्मान् रक्षतु । अत्र शिवपदेन शिवराजः शृङ्गान्तरं शृङ्गतः इत्यनेन नानादुर्गाक्रमणं, नानामृगैः सङ्कुलं इत्यनेन नानारिपुगणावकीर्णत्वं मृगयुपदेन रिपुदलानुसरणं, विजयाय दिव्यं निजास्त्रं दिशन् इत्यनेन मन्त्रादिभ्यो, लीलाकिरातपदेन च किरातवत् सह्याद्रिकानने पर्यटनं सूच्यते । पिनाकपाणिपदेन, वीररसस्याङ्गित्वमिति ।

---

भगवान् शंकर जो लीलापूर्वक (स्वेच्छया) किरातवेश धारण कर, हाथ में पिनाक (धनुष) लिए, अनेक पशुओं से पूर्ण एवं करुणा के सदृश गंगा को लपेटे हिमालय के एक से दूसरे (उच्च) शिखर तक द्रुतगति में हरिणों का अनुसरण करते, और बलोत्कर्ष से सन्तुष्ट होकर, अर्जुन को विजय के लिए अपना पाशुपत अस्त्र देते हैं—आप सबकी रक्षा करें । (शार्दूलविक्रीडित छन्द)

नान्द्यन्ते

सूत्रधार—(नेपथ्याभिमुखमवलोक्य) आर्ये, अलमतिपरिश्रमेण । इतस्तावदागम्यताम् ।

नटी—(प्रविश्य) इयमस्मि । आज्ञापयत्वार्यपुत्रः ।

सूत्रधार—अद्य खलु नटपुरवास्तव्यमूलशङ्करविरचितेनछत्रपति-साम्राज्याख्येन नवेन नाटकेनैषा परिषत्सभाजनीया । तत्प्रस्तूयतां तावन्मल्लाररागेण स्वरतालबद्धा कापि रमणीया गीतिः परिषच्चेतोरञ्जनाय । सम्प्रति खलु—

तपनांशुतपनशमनो ऽनिलचपलचञ्चलोल्लसितमेघ.
गर्जति वर्षति विकिरति वनचरनिकरान् प्रसादयति लोकान् ॥ २

नटी—यदार्यपुत्र आज्ञापयति । (इति गायति)

---

(नान्दी के पश्चात्)

सूत्रधार—(नेपथ्य की ओर देखकर) आर्ये बहुत परिश्रम न करो। आओ, इधर आओ।

*नटी—(प्रवेश कर) यह आ गयी मैं। आज्ञा दें आर्यपुत्र।*

सूत्रधार—आज नटपुरनिवासी मूलशंकर लिखित छत्रपति—साम्राज्य नामक नवीन नाटक द्वारा इस परिषद् का मनोरंजन होना चाहिए। अतः मल्लार-राग मे, स्वर और तालबद्ध कोई सुन्दर गीत, सभा के मनोरंजनार्थ प्रस्तुत करो। इस समय तो—

सूर्य के ताप को शान्त करनेवाले मेघ, वायु के कारण इधर-उधर घूमते हुए चंचल विद्युल्लता से प्रकाशित होते, गर्जन के साथ जल-वर्षा करके, वनचर-समूह को तितर-बितर और मनुष्यों को आनन्दित करते हैं।

नटी—जो आर्यपुत्र की आज्ञा। (गाती है)

(मल्लाररागेण त्रितालेन गीयते)

रसयति रसयति रसा विशाला ।
विचलति चपलपयोधरमाला ॥
भवति सपदि जनतापविलयनम् ।
मृग्यति मृगपतिरपरि निलयनम् ॥ रस० ॥ १
नमयति तरुगणमलमासार ।
क्षुभ्यति गर्जति पारावार ॥ रस० ॥ २
नन्दति मुदितो जनपदलोक ।
जलदविलोकनविगलित शोक ॥ रस० ॥ ३

सूत्रधार—(परिषदमभिमुखमवलोक्य) आर्ये, एष स्वामभिनन्दति तव सङ्गीतकलाकौशलेन समाराधितो रङ्ग ।

नटी—आर्यपुत्र सत्यमयम्

शिष्या यदुत्कर्षमवाप्नुवन्ति,
प्रभाव एवैष गुरोरमोघ ।

---

(मल्लार राग में त्रितालबद्ध गीत)

विशाल धरती जल का भूरि-भूरि आस्वादन करने लगी, चपल मेघो का दल इधर-उधर घूम रहा है। तुरन्त लोक का ताप नष्ट हो रहा है, सिंह पर्वत के उच्च भाग मे शरण ढूढने लगा। जल-बूदो के भार से वृक्षो का समूह नत हो रहा और विशाल सागर उफनाने लगा है। मेघदल को देखने के कारण अपने शोक को विस्मृत कर मनुष्य आनन्दित हो रहे हैं।

सूत्रधार—( सभा को देखकर ) आर्ये, यह सभा तुम्हारे इस सगीतकलाचातुरी से आनन्दित हो तुम्हे धन्यवाद दे रही है।

नटी—आर्यपुत्र ! यह सत्य है कि—

शिष्य यदि उत्कर्ष को प्राप्त होता है तो यह गुरु का अमोघप्रभाव ही है,

जात. प्रतापोद्धतकौरवाणां;
कृष्णोपदिष्टो हि जयो विजेता ॥ ३

सूत्रधार —(आकर्ण्य) आर्ये, शृणु तव गीतप्रकर्षेणोज्जृम्भितस्य नवजलधरस्यैतन्मन्दगर्जितम् ।

नटी—(सस्मितम्) आर्यपुत्र, नास्त्येतन्मेघगर्जितम् । किन्तु सम्प्रति भूभारावताराय तपनान्वये शङ्करांशेनावतीर्णः शिवराज. । स्वातन्त्र्यभावनया समिद्ध-

पित्रोर्गुरोश्चाधिगतार्थ विद्यो,
वीरानुरक्तैः सवयोभिरावृत. ।
स्वराज्य संस्थापननिश्चितव्रतो,
गर्जत्ययं केसरिण. किशोरः ॥ ४

(इति प्रस्तावना)

---

कृष्ण से उपदिष्ट होकर ही अर्जुन ने ऐश्वर्य के अभिमानी कौरवों पर विजय प्राप्त की थी ॥ ३

सूत्रधार—(सुनकर) आर्ये ,सुनो, तुम्हारे गीतराग से आकृष्ट हुआ नव जलधर मन्द गर्जन कर रहा है ।

नटी—(मुसकरा कर) आर्यपुत्र, यह मेघ-गर्जन नही है । बल्कि, धरती के भार को कम करने के लिए इस समय सूर्यवंश मे शंकर के अंश से युक्त शिवराज अवतीर्ण हो गए हैं। स्वातन्त्र्यभावना से समुल्लसित—

पिता और गुरु के समीप में राजनीति का अध्ययन करने वाला, वह, जिसमे वीरो और समवयस्क मित्रो का अनुराग है, (जो वीरो तथा समवयस्क मित्रो से सनाथ है ) स्वराज्य-स्थापना का दृढ़व्रती, केसरीकिशोर गरज रहा है । ४

(प्रस्तावना समाप्त)

(ततः प्रविशति वयस्यैः सह शिवराजः)

एसाजी—अहो किन्तु खलु

प्रवर्तित धर्मभुवनैकचक्र—
भूजैस्वलंयंमनयोपबृंहितैः ।
ते भारतीया यवनैरुपर्दिता,
नष्टप्रभा मानमभिमानशेषताम् ॥ ५

तानाजी—वयस्य स्वोदर पूरणाय यवनेशमुपाश्रिता वयमेव तत्र कारणम् ।

बाजी—अस्थान एव तवायमुपालम्भः । यतो मिथोविद्वेषविभिन्नानामस्माकं यवनेशाश्रयं विना काऽन्या गतिः सम्भाव्यते । सम्प्रति तु तेनैव सुनियन्त्रिता वयं सुखेन कालं यापयामः ।

एसाजी—उदारचरितानस्मन्नृपतिगणान् कूटप्रयोगैरुन्मूलयद्भिरेतैः किं न्याय्यमाचरितम् ।

---

(मित्रों सहित शिवराज का प्रवेश)

एसाजी—ओह, ऐसा क्यों है कि—

भारतीय, जो धर्म और नीति ज्ञान से समृद्ध हो कर भुवन-साम्राज्य (समस्त संसार) के प्रवर्तक अर्थात् समस्त संसार में शासक रहे, आज वही भारतीय जन यवनों से पीड़ित हो, अपने तेज को नष्ट कर नाममात्र को शेष रह गए। ५

तानाजी—अपने उदर की पूर्ति (स्वार्थ-साधना) हेतु यवनों के उपासक (आश्रित) हम स्वयं इसके कारण हैं।

बाजी—यह भाग्य उलाहना उचित नहीं है। क्योंकि जब पारस्परिक विद्वेष-भावना से हम भारत में ही कलह करते हैं तो यवनों की शरण के अतिरिक्त दूसरा मार्ग भी कौन है? इस समय तो हम उन्हीं के निर्देशन में सुख से समय बिता रहे हैं।

एसाजी—क्या अपनी कूटनीति द्वारा उन्होंने हमारे उदारचरित सम्राटों का मूलोच्छेदन कर उचित किया?

बाजी —न सत्यमेकान्तेन दोषभाजो यवनेश्वराः। यतः

परस्परोन्मूलन सप्रवृत्तान्,
विहाय धर्मं विषयेषु सक्तान्।
निरयं प्रजास्वापहरान्नृपालान्,
निगृह्य तैर्गर्ह्यमनुष्ठितं किम्॥ ६

एसाजी —अरे किमेव भ्रान्तोऽसि। धर्मच्युतानेतान्निगृह्य किं धर्मराज्यं स्थापितं यवनेश्वरैः। एतेषामपचारपरंपरास्मरणेन जायते मे रोमहर्षः। सम्माननमिषेण राजसभामुपस्थापितस्य सात्मजस्य जाधवरावस्याकस्मिकवधेन प्रज्वलितः क्रोधानलोऽद्यापि सर्वत्र भृशं प्रज्वलति।

बाजी —स्वकृतघ्नताया एव फलमुपभुक्तं जाधवरावेण। यवनेश्वरस्तु तत्र निमित्तमात्रम्।

---

बाजी—इस सन्दर्भ में यवनशासक ही केवल दोषी नहीं हैं क्योंकि—

पारस्परिक द्वेष के कारण एक दूसरे का विनाश करने में रत, धर्मानुसरण का मार्ग त्याग भोग-विलास में अनुरक्त, अपने कर्तव्य से विरत, निरय प्रजा के धन का दुरुपयोग करने वाले नरेशों का नाश करके उन्होंने अनुचित क्या किया ? ६

एसाजी—यह आप कैसे भ्रम में पड़ रहे हैं ? क्या इन यवनों ने हमारे धर्मच्युत राजाओं का अन्त करके धर्मराज्य स्थापित किया है ? इनके अत्याचार-परम्परा के स्मरणमात्र से मुझे रोमांच हो आता है। सम्मान देने के व्याज से सभा में उपस्थित किये गये पुत्र-सहित जाधवराव के अचानक वध से प्रज्वलित क्रोधानल आज भी सर्वत्र भली-भाँति जल रहा है।

बाजी—अपनी कृतघ्नता का ही फल जाधवराव को मिला। यवनराज तो उसमें निमित्त मात्र रहे।

शिवराज—वयस्या, अलं वचनप्रतिवचनैः । परमार्थतस्तु न केवलमेकान्तेन दोषभाजो दुर्वृत्ता यवनेश्वराः किन्तु तत्सधर्माण इदानींतना राष्ट्रद्रुहः क्षत्रेश्वरा अपि । यतः

दुर्वृत्ते नृपतौ तु मंत्रिसचिवास्त्यक्त्वा नियोगं निजं,
स्वच्छन्दं विहरन्ति कामवशगा उद्वेजयन्त. प्रजाः ।
राष्ट्रोपप्लवशङ्कयाऽन्यनृपतिं सद्य श्रयन्ते जनाः,
कालेनापचयेन कोशबलयो राष्ट्रं ततो नश्यति ।। ७

तद्वयस्या

उद्धर्तुमेनां परिपीडितां भुवं,
धर्मच्युतं दुर्मदराजसंघं ।
साम्राज्यसंस्थापनमन्तरेण,
न वर्ततेऽन्याऽर्थकरी प्रतिक्रिया ।। ८

अपि चाततायिभ्य स्वप्रजानिर्विशेषं प्रजानां परिपालनमेव सर्वत्र राज्ञः परमोधर्मः । अतो धर्मराज्यसंस्थापनोद्यतस्य मम—

---

शिवराज—मित्रो, वाद विवाद समाप्त करो । सत्य तो यह है—केवल यवन-शासक ही दोषी नहीं हैं अपितु राष्ट्रद्रोही क्षत्रियनरेश भी उन्हीं के समानधर्मी हैं । क्योंकि—राजा के दुर्वृत्त हो जाने पर मन्त्री, सचिव सभी अपना कर्तव्य भुला देते हैं—स्वतन्त्र हो जाते हैं और विलास-साधन में रत प्रजा को पीडित करने लगते हैं । प्रजा विप्लव के भय से अन्य राजा का आश्रय लेती है और इस प्रकार धीरे-धीरे कोश, बल, राष्ट्र नष्ट हो जाता है । ७

इसलिए मित्रो—इस भूमि को धर्मच्युत, उन्मद शासकों के अत्याचार से मुक्त करने के लिए स्वतन्त्र साम्राज्य-स्थापना के अतिरिक्त अन्य कोई श्रेयस्कर मार्ग नहीं है । ८

और सर्वत्र अत्याचारियों से प्रजा का अपनी औरस सन्तान की भाँति पालन और रक्षा करना राजा का परम धर्म है । अतः स्वराज्य संस्थापना के लिए उद्यत मेरे द्वारा—

दुर्वृत्तभृत्वाहित राज्यभारा,
प्रजाद्रुहश्चार्थपरा कुशीला ।
क्षत्रेश्वरा वा यवनेश्वरा वा,
सद्यो भविष्यन्ति कृपाणगोचरा ॥ ९

बाजी—कुमार, प्रतापसमाकुलो हि बलवता विरोधः । यतः
विना विवेकं प्रतिपद्य साहसं,
पराभवं किल यश्चिकीर्षति ।
विपद्विभिन्न ग जनोऽल्पसाधन,
क्षुब्धार्णवे नौरिव सीदति स्वयम् ॥ १०

शिवराज—वयस्य, साहसेन एव श्री प्रतिष्ठिता । यत
रिपुप्रकर्षे ऽप्यनपास्तधृति—
जितेन्द्रिय साहस विक्रमोर्जित ।
दिवानिशं यः सतत प्रयत्नवा—
स्तमेव सद्यो वृणुते नृपश्रीः ॥ ११

---

वे समस्त राजा, (क्षत्रिय अथवा यवन) जो प्रजा का द्रोह करने वाले, दुर्वृत्त मे रत, स्वार्थसाधन मे तत्पर, अनीतिगामी हैं, शीघ्र मेरे कृपाण के ग्रास बन जायेंगे । ९

बाजी—कुमार, बलवान् से विरोध लेना हानिप्रद होता है। क्योकि विवेकहीन यदि कोई साहस के सहारे शत्रु को अल्प साधनो से पराजित करना चाहता है, वह उसी प्रकार नष्ट हो जाता है जैसे महासमुद्र म उफान आने पर नौका नष्ट हो जाती है। १०

शिवराज—मित्र, साहस से श्री की प्रतिष्ठा है (श्री की प्राप्ति होती है) क्योकि—राजलक्ष्मी उसी का वरण करती है जो शत्रु के अभ्युदय मे भी धैर्य और साहस नही छोडता, जो जितेन्द्रिय, सतत प्रयत्नशील तथा जो बल-विक्रम का स्थान है। ११

पुराऽपि साहसेनैव स्वायत्तीकृतं स्वपितृपैतामहं राज्यं पाण्डुनन्दनैः ।

एसाजी —अये तेजस्विना तु साधननिरपेक्षैव साध्यसिद्धिः । यतः

स्वल्पोऽप्यग्निर्ज्वलयति न किं काननं शैलसंस्थं,
मत्तेभेन्द्रान्विदलति न किं लीलया सिंहशावः ।
बालोऽप्यर्को विकिरति न किं ध्वान्तमाराद् क्षणेन,
सर्वत्रैवाप्रतिहतरयस्तेजसां हि प्रभावः ॥ १२

तानाजी —कुमार तेजस्विनामपि साहाय्यमन्तरेण तु सशयितैव कार्यसिद्धिः । परन्तु

यथा समन्तात् सरितः प्रवाहं,
स्रोतांसि सर्वाणि समाविशन्ति ।
तेजस्विनं लोकहितैकतत्परं,
तथा स्वयं वीरगणा श्रयन्ते ॥ १३

---

प्राचीन समय मे भी पाण्डवो ने अपने पूर्वजो के राज्य पर साहस से ही अधिकार किया था ।

एसाजी—तेजस्वियो को तो साधन न होने पर भी कार्य-सिद्धि हो-जाती है । क्योंकि

तेजस्वियो का प्रभाव सवत्र ही अप्रतिम होता है—क्या अग्नि का एक कण भी पर्वतस्थित जगल को भस्म नही कर डालता ? क्या छोटा-सा सिंह-शावक मत्त हाथी को विदीर्ण नही करता क्या बाल सूर्य घने अन्धकार को क्षणमात्र म नष्ट नही कर डालता ? १२

तानाजी—कुमार, तेजस्वियो के लिए भी साहाय्य के अभाव मे कार्यसिद्धि सशयात्मक ही होती है । परन्तु—जैसे नदी के प्रवाह म चारो ओर से स्रोत आकर प्रवेश करते हैं उसी प्रकार लोकहित म तत्पर तेजस्वी व्यक्ति का अनुसरण वीरगण स्वयं किया करते हैं । १३

शिवराज—नास्त्यत्र विसंवादः । लोकहिततत्परस्य तु सन्ति निसर्गसिद्धाः सहायाः । तद्भवद्भिः प्रकल्पितेनोपायविशेषेणाहं

साहाय्यमासाद्य महद्वनौकसां,
ध्रुवं विजेष्ये यवनेशमुन्मदम् ।
रघूद्वहाभ्यां कपिसेनया न किं,
दशाननस्यापि कृता पराभवता ॥ १४

अनुचर—(प्रविश्य) विजयतां कुमारः । स्वभगिनीमानयतस्तस्य ग्रामं प्रापयन्तं नेताजी मार्गे समाक्रम्य सद्यस्तं व्यापाद्य च स निहत्यापहृता तस्य भगिनी बीजापुरसैनिकैः । (इति निष्क्रान्तः)

---

साहाय्यमिति—वने ओकः निवासः येषां तेषां वनौकसां मावलेजनानां, महत् साहाय्यमासाद्य प्राप्य, उन्मदमुन्मत्तं यवनेशं बीजापुरेशं ध्रुवं निश्चयेन विजेष्ये । रघूद्वहाभ्यां रामलक्ष्मणाभ्यां कपिसेनया दशाननस्य रावणस्य, अपि पराभवता किं न कृता । अपितु कृतैव । यदि रामलक्ष्मणाभ्यां कपिसेनया दशाननो निहतः तदा वयं सर्वे मिलित्वा मानवसेनया एकाननं बीजापुरेशं ध्रुवं विजेष्यामहे इति ।

---

शिवराज—इसमें कोई संशय नहीं है । आप लोग सहमत हैं कि लोकहितैषी व्यक्ति को स्वयं ही सहायक और सहायता की प्राप्ति हो जाती है । अतः मैं आप लोगों द्वारा समर्थित उपाय से ही—

वनवासी मावलों की सहायता से निश्चित रूप से बीजापुरनरेश पर विजय करूँगा, क्या राम-लक्ष्मण ने कपि सेना की सहायता से दशानन रावण को निर्विलीन नहीं कर दिया था । १४

अनुचर—(प्रवेश कर) कुमार ! जय हो । अपनी भगिनी को गाँव ले जाते समय, मार्ग में नेताजी को बीजापुर के सैनिकों ने मार डाला और उनकी भगिनी का अपहरण कर लिया । (चला जाता है ।)

शिवराज—(सरोषम्) अरे कथमेतादृशमत्याहितं क्षत्रकुलप्रसूतैरस्माभिर्मर्षणीयम्। वयस्याः

आर्तानां परिपालनाय सहसा शस्त्रं न येनोद्धृतं,
विप्राणां व्रतिनां च वेदविदुषामाराधने न स्थितम्।
राज्ञामुत्पथगामिनां प्रमथने युद्धं न संवादृतं,
क्षात्रं जन्म धिगस्य राघवयशः प्रज्वालिते भारते ॥ १५

तदद्य धर्मराज्यसंस्थापनेन सपादनीयमस्मज्जीवितसाफल्यम्।

एसाजी—अभिनन्द्यते कुमारभाषितम्। (दूरं विलोक्य) एष दादोजी देशमुख इत एवाभिवर्तते।

---

आर्तानामिति—येन आर्तानां पीडितानां परिपालनाय रक्षणाय शस्त्रं न उद्धृतं येन च वेदविदुषा वेदविदा व्रतिना ब्रह्मचर्यादि व्रतनिष्ठाना विप्राणामाराधने न स्थितं, येन च उत्पथगामिनामुन्मार्गप्रवृत्तानां राज्ञां प्रमथने विनाशे युद्धं न आदृतमस्य क्षात्रं जन्म रामस्य यशसा प्रज्वालिते प्रकाशिते भारते धिक् निन्द्यमेवेत्यर्थः।

---

शिवराज—(रोष सहित) ओह! क्षत्रियकुलोद्भूत हम लोग इस अपराध को कैसे क्षमा कर सकते हैं। मित्रो—

पराक्रमी राम के यश से प्रज्वलित इस भरत भूमि में जन्म लेनेवाले उस क्षत्रिय का जन्म ही व्यर्थ है, वह सर्वथा निन्द्य है—जिसने आर्त्तों की पुकार कर सुन उसके रक्षणार्थ तुरन्त शस्त्र नहीं उठाया, जो वेदज्ञ, व्रती ब्राह्मणों की आराधना में प्रवृत्त नहीं हुआ और जिसने अनीतिपालक अनाचारी राजा के विनाशार्थ युद्ध का उपक्रम नहीं किया। १५

अतः हम लोग धर्मराज्य की स्थापना करके अपने जीवन को सफल बनायें।

एसाजी—हमें स्वीकार है कुमार! आपके कथन का हम अभिनन्दन करते हैं। (दूर देखकर) दादोजी देशमुख यहीं आ रहे हैं।

दादोजी —(प्रविश्य) अप्यनामयं कुमारस्य।

शिवराज —स्वागतं देशप्रमुखप्रवरस्य। समन्तात् प्रवृत्ते लोकविप्लवे कुतोऽनामयं क्षत्रियाणाम्।

दादोजी —तथ्यमेवाभिहितं कुमारेण। यतो लोकसंग्रहार्थमेव ध्रियन्ते क्षत्रियस्य प्राणाः। कुमार त्वदधीन एवास्यास्य महतः कार्यस्योपक्रमः। तद्भविष्याम्यहमत्र यावज्जीवं तव सहायः।

शिवराज —अनुगृहीतोऽहं भवता सौजन्येन। वयस्याः प्रथमं तावदस्माभिर्बीजापुरेशहस्तगता सह्याद्रिदुर्गाः कथमपि स्वायत्तीकर्तव्याः।

बाजी —प्रचुरकोशबलाढ्योऽयं वर्तते बीजापुरेश्वरः। सत्
शक्तित्रयोत्कर्षं समेधितानां,
सामाद्युपायं परिरक्षितानाम्।

---

दादोजी—(प्रवेश करके) कुमार कुशल हैं न ?

शिवराज—देशमुख-कुल शिरोमणि का हम स्वागत करते हैं। सर्वत्र जब लोकविप्लव उपस्थित हो तो क्षत्रिय को विश्राम कहाँ ?

दादोजी—कुमार ! सत्य कह रहे हैं। क्योंकि लोकसंग्रहार्थ ही क्षत्रियों ने प्राण धारण किया है। इस महान् कार्य का उपक्रम आपके ही अधीन है कुमार ! अतः हम जीवन पर्यन्त आपके इस कार्य में सहायक रहेंगे।

शिवराज—आपके सौजन्य के लिए हम आभारी हैं। मित्रो, सर्व प्रथम, बीजापुरनरेश द्वारा हस्तगत सह्याद्रि-दुर्गों को अपने अधिकार में करना चाहिए।

बाजी—बीजापुरनरेश प्रचुरकोश एवं शक्तिशाली है। अतः तीनों शक्तियों के उत्कर्ष से समृद्ध, साम, दाम, दण्ड, भेद चारों उपायों से

षाड्गुण्ययोगोन्मथितद्विषा किं,
विद्वेषत श्रेय उपाश्रयेम् ॥ १६

एराजो:—बलवताप्यभिभवायोज्जृम्भते परा संघशक्ति । यत.

प्रभावमुख्या न हि शक्तयस्तथा
संपादयन्तीप्सितकार्यसिद्धिम् ।
यथा रिपौ कोशबलप्रमत्ते,
नयप्रयुक्ता परसंघशक्ति ॥ १७

तानाजी.—उदात्तचरितानामेव परिपन्थिनामभियोग उपयुक्ता एता शक्तयो न स्वघ्नतानाम् । अपि च

मन्त्रगुप्तिविरहाद्गणसंघो,
युक्तिसस्तु भवत सुखभेद्यो ।

---

प्रभावेति—प्रभाव मुख्य प्रधान. यासु ता. प्रभुमन्त्रोत्साहशक्तय. कोशबलाभ्या प्रमत्ते रिपौ तथा ईप्सितकार्यसिद्धि न सपादयन्ति यथा नयेन अर्थशास्त्रविहितरीत्या प्रयुक्ता परा उत्कृष्टा चासौ सघशक्तिश्च कार्यं सपादयतीत्यर्थ । १७

---

रक्षित और राजनीति के छह गुणो के सहारे अपने शत्रु को पराजित करनेवाले शक्तिशाली से शत्रुता करके हमे क्या लाभ होगा ?

एराजी—सब शक्तियों से उत्कृष्ट सघशक्ति शक्तिशाली को भी पराजित होने के लिए विवश कर सकती है—क्योंकि, कोशबल से प्रमत्त शत्रु के लिए तीन शक्ति ( मन्त्रोत्साहादि ) उतनी प्रभावक नहीं है जितनी कि नीति-विहित गठित सघशक्ति । १७

तानाजी—ये शक्तियाँ तो उदारचरित शत्रु से सघर्ष करने के लिए उपयुक्त है न कि घ.न शत्रु के लिए। और भी—मन्त्र भेदादि की सहायता से केवल क्षत्रिय, वणिक् आदि के गणो को विच्छिन्न करना

मायया प्रथमपरप्रतिघात,
श्रेयसे नयविदा नृपतीनाम् ॥ १८

तत्पञ्चमोपायमात्रसाध्यः भविष्यत्यधमारातेः ।

शिवराज—ममाप्येतदेवास्त्यभिमतम् । यतः

परे तु तेजस्विनि धर्म्यवृत्तौ,
सामाद्युपाया सफला भवन्ति ।
न विद्यते दुर्नयशालिनो जये,
मायाप्रयोगादपरा प्रतिक्रिया ॥ १९

अपि च

धर्मतः प्रतिविधानमात्मनो,
विप्लवाय कुटिलायुते रिपौ ।
विष्णुनाऽपि बलिनः सुरद्विषः,
घातिताः प्रतियुगं स्वमायया ॥ २०

---

मन्त्रेति—गणा क्षत्रियाणां, वणिजां, वा, सर्व जानपदानां तो मन्त्रस्य गुप्ते रक्षणस्य विरहात् मन्त्रभेदादित्यर्थं युक्तिः सामाद्युपायं सुखभेद्यो भवतः । अतः मायया, छलप्रयोगं प्रथमं न पर रिपु तस्य प्रतिघातः नयविदा नृपतीनां श्रेयसे भवतीत्यर्थं ॥ १८

---

सहज है परन्तु प्रथम शत्रु से मुकाबला करने के लिए नीतिज्ञ नृपति द्वारा छल, माया का सहारा लेना परम श्रेयस्कर है । १८

अतः अधम शत्रु का विनाश पंचमोपाय माया आदि से ही साध्य होगा ।

शिवराज—मेरा भी अभिमत यही है । क्योंकि—धर्मवृत्तिवाले तेजस्वी शत्रु के समक्ष ही सामदामादि उपाय सफल होते हैं और दुर्नीतिगामी शत्रु पर विजय प्राप्त करने के लिए माया प्रयोग के अतिरिक्त अन्य उपाय नहीं है । १९

और भी—पापवृत्ति शत्रु के विरुद्ध धर्मनीति का व्यवहार स्वविनाश का कारण होता है—भगवान् विष्णु ने भी बलशाली असुरों के विनाश के लिए अपनी माया का प्रयोग हमेशा किया था । २०

सर्वे.—सर्वथा अभिनन्द्यते कुमारवचनम् ।

शिवराज—तदेव भवन्मित्रपदमारूढोऽहमद्य प्रतिजाने यत्

मानं धनं राजविलासभोगान्,
मित्राणि दारानपि जीवितं च ।
हुत्वा रिपुज्वालितहव्यवाहने,
संस्थापयिष्ये मम धर्मराज्यम् ॥ २१

सर्वे—कुमार, एतद्भीष्मप्रतिज्ञासिद्धये बद्धपरिकरानस्मान्

दुर्भेद्यदुर्गाक्रमणे प्रयाणे,
रणाङ्गणे दुष्करसाहसे वा ।
अवेहि राजस्तव पार्श्ववर्तिनः,
स्वजीवितेऽस्मिन्निरपेक्षतां गतान् ॥ २२

शिवराज—वयस्याः भविष्यन्ति भवन्त एवाधिकारपदभागिनो मम धर्मराज्ये । यतः

---

सभी—कुमार का कथन सर्वथा अभिनन्दनीय है ।

शिवराज—अतः आपका मित्र मैं घोषणा करता हूँ कि शत्रु के द्वारा प्रज्वालित रणरूपी अग्नि यज्ञ में मैं अपने मान, सम्मान, धन, भोग विलास, मित्रों, पत्नी और प्राणों तक की आहुति देकर अपने धर्मराज्य की स्थापना करूँगा ॥ २१

सभी—कुमार, आपकी इस भीष्मप्रतिज्ञा की सिद्धि-हेतु हम कटिबद्ध होकर—

दुर्भेद्यदुर्गों के ऊपर आक्रमण करते समय, रणाङ्गण में प्रयाण-समय अथवा अन्य दुष्कर एवं साहसी कार्यों में, राजन् ! अपने प्राणों तक की चिन्ता बिना किये आपके पार्श्ववर्ती रहेंगे, ऐसा समझें ॥ २२

शिवराज—मित्रो, मेरे धर्मराज्य में आप सब अधिकार पद के भागी होंगे । क्योंकि—

समानविद्यानयविक्रमेषु ,
राष्ट्रैकभक्तिप्रथितान्वयेषु ।
जितेन्द्रियेष्वेव निजाधिकारं ;
विभज्य साम्राज्यमुपैति भूमिप ॥ २३

(तत प्रविशत्यपटीक्षेपेण दादाजीकोंडदेव)

शिवराज —(सप्रश्रयम्) स्वागत भगवत ।

दादाजी —वत्स, विरमास्मात्साहसाध्यवसायात् । एष कुलक्रमागतवृत्तिपरित्यागात् तवानर्थापत्तिरेवेति सर्वये ।

शिवराज —भगवन् यवनेशाविद्वेषप्रभवानर्थशतावपि श्रेय एवेति मे बलवान् प्रत्यय । यत

---

धर्मेति—धर्मस्य ध्वस. विनाश सदर्थं धृत व्रत यै. तान् पण्यने लुब्धान् मृदौ निर्दयान् क्रूरान् विक्रमशालिनि मन्दान् नम्रान् प्रतिभटे कूटप्रयोगे छलप्रयोगे उत्कटान् उग्रान् स्वस्मिन् विश्वस्ते अपि हिंसकान् वधोद्यतान् कुलवधूना सकर्षणे अपहरणे सोत्सवान् गोविप्रेषु अपकारिण. देवद्विष इमान् यवनेश्वरान् वयमह सहामे ।

---

विद्या, नीति, पराक्रम, राष्ट्रभक्ति, प्रतिष्ठित कुल मे उत्पन्न जितेन्द्रियों मे अपने अधिकार का समान विभाजन करनेवाला राजा ही साम्राज्य सत्ता को सुदृढ़ कर सकता है। २३

शिवराज—(नम्रता से) आपका स्वागत है।

दादाजी—वत्स, इस दुस्साहसपूर्ण प्रतिज्ञा को छोड दो। इस प्रकार कुलक्रमागत वृत्ति के परित्याग से आपके ही अनर्थ की सम्भावना हो सकती है।

शिवराज—भगवन्, शतशः अनर्थों को उत्पन्न करनेवाली भी यवनेश की यह शत्रुता हमारे लिए श्रेयस्कर है। क्योंकि—

शिवराज —सम्प्रति प्रभविष्याम्यहं सन्नाहयितुं मम वीरनिवहान् । अथ कियत्परिमाणोऽयं निधिः परिकल्प्यते ।

नेताजी —देव, पर्याप्त एवायमस्मत्प्रयोजनाय ।

मणिकार —(प्रविश्य) विजयतां देव ।

शिवराज —अवधार्यतामस्य कोशसञ्चयस्य मूल्यपरिमाणम् ।

मणिकार —( निरीक्ष्य ) देव सूक्ष्मानेनाय दशलक्षहिरण्यार्हो भवितुमर्हति ।

शिवराज —तावत्पत्रमारोप्य विस्तरेण वदास्य मूल्य परिच्छेद-व्यञ्जक परिसंख्यानम् ।

मणिकार —तथा । (इति यथोक्तं कुरुते)

शिवराज —वीर महानेषोऽनुग्रह परदेवतायाः । यतः सम्प्रति खलु मम ।

---

शिवराज—अब मैं सेना तैयार करने योग्य हो गया । तुम इस निधि को कितने मूल्य की अनुमान करते हो ।

नेताजी—देव, हमारे प्रयोजन के लिए यह पर्याप्त है ।

मणिकार—(पहुँचकर) विजय हो देव ।

शिवराज—इस धनराशि का मूल्य अनुमान करो ।

मणिकार—(निरीक्षण करके) भलीभाँति निरीक्षण करने पर यह लगभग दस लाख मूल्य का प्रतीत होता है ।

शिवराज—इसके मूल्य का परिमाण मुझे विस्तार से लिखित रूप में दे दो ।

मणिकार—जो आज्ञा । (कथनानुसार करता है)

शिवराज—वीर, शक्तिमान का परम अनुग्रह है यह । क्योंकि इस समय मेरी—

शस्त्रास्त्रसन्नद्धरणोत्सुका भटा, सद्य पराहत्य परप्रवीरान् ।
अत्युत्कट मर्मविदारण द्विषा प्रकाशयिष्यन्त्यतुल पराक्रमम् ॥१०

अङ्गरक्षक —(प्रविश्य) एष द्विभाषसमेत फिरङ्गी देव द्रष्टुमिच्छति ।

शिवराज —शीघ्रमेन प्रवेशय ।

अङ्गरक्षक तथा । (इति निष्क्रान्त)

द्विभाष —(फिरङ्गिण निर्दिश्य) एष महाराज सुप्रभातमावेदयति ।

शिवराज —प्रीतोऽस्म्यस्य समुदाचारेण । क्रीतो मया सार्ध-मासेनायुधसञ्चय इति समावेदय ।

द्विभाष .—तथा । (इति यथोक्त कुरुते)

शिवराज —अपि सुव्यवस्थितोऽय व्यवहार ।

द्विभाष —अथ किम् । एष पुनर्महाराजस्यानुग्रहमभिमत्य गम-नायानुज्ञा याचते ।

---

सेना के वीर जो युद्ध करने के लिए सन्नद्ध और उत्सुक है, शस्त्रास्त्रों से सज्जित हो अपने पराक्रम को अधिक सफलता से दिखला सकेंगे और उनका शौर्य शत्रु के मर्म को विदीर्ण करेगा ।१०

अङ्गरक्षक—(प्रवेश कर) द्विभाषिए के साथ विदेशी, देव का दर्शन चाहता है ।

शिवराज—तुरन्त उपस्थित करो ।

अङ्गरक्षक—जो आज्ञा । (जाता है)

द्विभाषी—(विदेशी को दिखाकर) यह महाराज को प्रात का नमस्कार निवेदन कर रहे है ।

शिवराज—मैं इसके व्यवहार से प्रसन्न हूँ । कह दो कि मैंने इसके शस्त्रास्त्रों को डेढ़ मास में खरीद लिया ।

द्विभाषी—अस्तु जो आदेश । (कहता है)

शिवराज—क्या यह व्यवस्था मान्य है ?

द्विभाषी—जी हाँ । आपके अनुग्रह का आभार मानते हुए जाने की आज्ञा चाहते हैं ।

मणिकार —(उपसृत्य) एतत्सविस्तरं परिसंख्यानम्।

(इति पत्रमर्पयति)

शिवराज —(पत्रमादाय वाचयित्वा) द्विभाष आगामुकमभ्यायुध-सचय वयमेव क्रेष्याम इति वणिक्पतिमवगमय।

द्विभाष —तथा। (इति यथोक्तं कुरुते)

शिवराज —अये मणिकार प्रापयैतावावैशिकमन्दिरम्। मद्वचना-च्चोच्यतां तत्राधिकृतोऽध्यक्षो यदयं वैदेशिकः सपरिवारमातिथ्येन सम्माननीय इति।

मणिकार —तथा (इति निष्क्रान्तास्त्रय)

शिवराज —क कोऽत्र भो।

अंगरक्षक —(प्रविश्य) आज्ञापयतु देव।

शिवराज —मन्त्रगृहमार्गमादेशय।

---

मणिकार—(आकर) यह सविस्तार तालिका है। (पत्र देता है)

शिवराज—(पत्र लेकर और पढ़ने के बाद) द्विभाष। वणिकपति को सूचित कर दो कि हम इनमे से और भी वस्त्रास्त्र खरीद लेंगे।

द्विभाषी—जैसा आदेश। (उससे कहता है।)

शिवराज—मणिकार, तुम दोनों को अतिथिभवन में ले जाओ। मेरी ओर से अध्यक्ष को निवेदन करो कि यह विदेशी सपरिवार राज्य-अतिथि के रूप में सम्मानित किया जाय।

मणिकार—जैसी आज्ञा। (तीनों चले जाते हैं)

शिवराज—कौन, कोई है?

अङ्गरक्षक—(प्रवेशकर) आज्ञा देव।

शिवराज—मन्त्रणागृह का मार्ग निर्देश करो।

मंगरक्षक :—इत इतो देवः। (सर्वेपरिक्रामन्ति) एतन्मंत्रगृहद्वार प्रविशतु देवः सानुग.। (इति निष्क्रान्तः)

(ततः प्रविशति मंत्रगृहावस्थिता मंत्रिणः)

शिवराज :—(प्रविश्य) मंत्रिण दिष्ट्या सफलोऽस्माकं मनोरथः।

मंत्रिण :—(उत्थाय) वर्धतां देवोऽभीष्टसम्पदा।

(इति शिवराजमनु सर्वे उपविशन्ति)

शिवराज :—सचिव त्वं तावदविलम्बेन निर्माय नूतनं दुर्भेद्य-प्राकारादि परिवेष्टितं राजगडदुर्गमापादयास्य राजधानीयोग्यताम्। यावत्तत्र स्थिता वयं राजकार्याणि पश्येम।

सचिव —यदाज्ञापयति देव.। (इति निष्क्रान्त)

शिवराज :—वीर त्वमपि फिरङ्गिण. क्रीतैरायुधं संनाह्य माव-लेजनवाहिनीं कल्याणजयार्थमभिनियुक्तमाबाजीवीरं संप्रतिपद्यस्व। सद्य एव

---

मङ्गरक्षक—इधर से देव, इधर से। (सभी चलते हैं) यह मंत्रणा-गृह का द्वार है, साथियों सहित प्रवेश करें देव। (चला जाता है)

(उसके पश्चात् मंत्रणागृह में मन्त्रिगण बैठे दिखायी पड़ते हैं)

शिवराज—(प्रवेश कर) मन्त्रियों भाग्य से हमारा मनोरथ पूर्ण हुआ।

मन्त्रिगण—(उठकर) देवका मनोरथ पूर्ण होता रहे। (शिवराज के बैठने के बाद सभी बैठते हैं।)

शिवराज—सचिव, तुम शीघ्र ही प्राकारादि से घिरे हुए दुर्भेद्य एक नवीन दुर्ग राजगड का निर्माण कर उसे राजधानी के योग्य तैयार करो। हम उस दुर्ग से राजकार्य देखेंगे।

सचिव—जैसी आज्ञा देव। (कहकर चला जाता है)

शिवराज—वीर, तुम भी तुरन्त ही विदेशी वणिक् से खरीदे हुए शस्त्रास्त्रों से मावलो की सेना तैयार करके, कल्याण विजय के लिए प्रेषित आबाजी वीर से आकर सम्मिलित हो जाओ। तुरन्त ही

सुतीक्ष्णभल्लासियनु समूजिता, विशालतूणीपरिणद्धपार्श्वा ।
स्वातंत्र्यसम्भावनया समेधिता, प्रयान्तु मे वन्यपदातिसेना ॥११

नेताजी —यद्देव आज्ञापयति । (इति निष्क्रान्तः) ।

(शिवराज :—अमात्य, त्वयि विनिहित राज्यभारोऽहमपि तावत्सेनानायकेन सह कोंकणजयार्थं प्रतिष्ठे । तदवेवाद्यप्रभृति सर्वाणि राजकार्याणि ।

तानाजी :—यदाज्ञापयति देव । (इतिनिष्क्रान्ताः सर्वे)

समाप्तोऽयं निधिसम्प्राप्तिनामा
द्वितीयोऽङ्कः



---

तीक्ष्ण भालों, कृपाणों, धनुषों से प्रबल, कटि-प्रदेश में तूणीर (तरकस) कसे हुए, स्वातन्त्र्य भावना से भली भाँति प्रोत्साहित, वन्य-जनों (वनवासियों) की हमारी पैदल सेना प्रस्थान कर रही है। ११

नेताजी —जैसी देव की आज्ञा । (चला जाता है)

शिवराज—मन्त्रिन् राजकाज का भार तुम पर छोड़कर मैं भी सेनानायक के साथ कोंकण-विजय के लिए प्रस्थित हो रहा हूँ । इसलिए आज से सभी राजकार्य की व्यवस्था करो ।

तानाजी—जैसी आज्ञा देव । (सभी जाते हैं)

निधिप्राप्ति नामक
द्वितीय अंक समाप्त



# तृतीयोऽङ्कः

(ततः प्रविशति राजगडदुर्गप्रासादावस्थितो मन्त्रिद्वितीयः शिवराजः)

शिवराजः—मन्त्रिन् सुव्यवस्थितेऽपि राज्यतन्त्रे कथमद्यापि निर्वृतिं न व्रजति मेऽन्तरात्मा।

रात्रिंदिवं रिपुगणान् शतशो निहत्य
नीतो वशं प्रसभमेव मया प्रदेशः।
नाद्य तथापि परिपन्थिवधाकुलो मे,
तृप्तिं प्रयाति नितरां तृषितः कृपाणः ॥१

मन्त्री—देव न स्वल्पस्वल्पीयसाऽर्थेन परितुष्यन्ति तेजस्विनः।

उद्भास्य शैलशिखरच्युतपादपाग्रं
तेजोनिधिः किमु ततो विरमेद्विवस्वान्।
अभ्युद्गतो गगनमध्यपथं क्रमेण,
धाम्ना निजेन निखिलं भुवनं चकास्ति ॥२

---

# तीसरा अंक

(उसके बाद मन्त्री के साथ राजगडदुर्ग में शिवराज आते हैं)

शिवराज—मन्त्रिन्, राज्यतन्त्र भली भाँति व्यवस्थित होने पर भी मेरा हृदय अशान्त ही क्यों है ?

यद्यपि रात दिन सैकड़ों शत्रुओं का वध करके हमने अपनी शक्ति से इस प्रदेश को अधिकार मे कर लिया, तथापि शत्रुओं का वध करने के लिए उत्सुक मेरी तलवार अभी भी सन्तुष्ट नहीं हुई।१

मन्त्री—देव, तेजस्वियों को थोड़ी सफलता से सन्तोष नहीं होता—

यथा सूर्य उदय होकर पर्वत की चोटियों पर लगे (स्थित) हुए वृक्षों के ऊपरी भाग को प्रकाशित करके ही विश्राम लेता है, नहीं वह धीरे धीरे गगन के मध्य तक पहुँचकर अपनी किरणों के प्रकाश से समस्त जगत को प्रकाशित कर देता है।२

संप्रति सत्यस्मदुपक्रमसंरम्भो बीजापुरेशो महता सैन्येन सहसाऽस्मानभियोक्ष्यत इत्याशङ्कते मे हृदयम् ।

शिवराजः—मयाऽप्येतदेव विमृश्यते ।

(नेपथ्ये)

वैतालिकः—विजयतां देवः ।

जनपदहितरक्तो नीतियोगप्रतिष्ठो,
विदलितरिपुसंघः स्वाभिलाषे वितृष्णः ।
शरणमुपगतानां दुर्गतानां शरण्य—
स्तपनकुलमणे त्वं राजसेऽमोघवीर्यः ॥३

शिवराजः—(आकर्ण्य) अहो, नयप्रयोगावलम्बेन सुखसाध्या भविष्यन्त्यरातय इति नास्त्यत्रौत्सुक्यकारणम् । तथापि सर्वात्मना बलोपचयः प्रार्थ्यतामत्र ।

---

अब हमारे इस प्रयास के प्रारम्भ हो जाने के कारण बीजापुर नरेश विशाल सेना-सहित हमारे ऊपर अचानक आक्रमण करेगा, ऐसी शंका होती है ।

शिवराज—मुझे भी शंका है ।

(नेपथ्य में)

वैतालिक—विजय हो, देव ।

हे सूर्यकुल के मणि ! देश हित के कार्यों में रत, नीति में निपुण और स्थिर शत्रु-समूह का नाश करके, अपने स्वार्थ का परित्याग करने वाले, दीनदुखियों के लिए शरण भूमि, तुम्हारा अप्रतिम बल-वीर्य से युक्त तेज चमक रहा है ।३

शिवराज—(सुनकर) ओह, नीति-प्रयोग के सहारे, सहज ही में शत्रुओं पर विजय प्राप्त हो जायगी, उतावली और चिन्ता की आवश्यकता नहीं । तथापि हमें सैन्य संगठन के लिए प्रयास करना चाहिए ।

मन्त्री —पूर्वमेव मयादिष्ट सेनानायकः पदातिदलसंग्रहाय ।

द्वारपाल —(प्रविश्य) विजयतां देव । एष कोंकण प्रान्तात् सम्प्राप्तो गोवलकरसामन्तो द्वारि तिष्ठति ।

शिवराज —प्रवेशयैनम् ।

द्वारपाल —तथा । (इति निष्क्रान्त )

सामन्त —(प्रविश्य) विजयतां महाराज । सर्वत्र विजयशालिनो महाराजस्य प्रणयपुर सरमुपायनीक्रियत एष भवानी खड्ग ।

देवानां नवविजयध्वजो रणाग्रे
दैत्यानां प्रलयकृदेष धूमकेतु ।
पापानां हृदयविदारणो महोग्र
खड्गोऽयं तव परिकल्पितो भवान्या ॥४

तात्स्वीकृत्यैनमनुगृहाण सेवकजनम् ।

शिवराज —(सानन्द स्वीकृत्य निरीक्ष्य च) भगवति परदेवते,

---

मन्त्री—मैंने सेनापति को पैदल सेना संगठित करने का आदेश पहले ही दे दिया है ।

द्वारपाल—(प्रवेश कर) विजय हो, देव । कोंकण प्रदेश से आये गोवलकर सामन्त द्वार पर स्थित हैं ।

शिवराज—उन्हें उपस्थित करो ।

द्वारपाल—जैसी आज्ञा (चला जाता है)

सामन्त—(प्रवेश कर) महाराज की जय हो । सर्वत्र विजय प्राप्त करने वाला, भवानी नामक यह कृपाण आपको मैं सादर भेंट करता हूँ—

युद्ध भूमि में देवों के लिए नवविजयध्वजा की भाँति लहरनेवाली, दैत्यों के लिए धूमकेतु-सदृश विनाशकारिणी कलुष हृदयों को विदीर्ण करनेवाली यह तलवार भवानी ने तुम्हारे लिए प्रदान की है ।४

अत इसे स्वीकार कर सेवक को अनुगृहीत करें ।

शिवराज—(सानन्द स्वीकार कर और निरीक्षण करके) भगवति !

(तत प्रविशति कल्याण प्रान्ताधिपस्नुषया सहित आबाजी )

आबाजी —वर्धतां देव कल्याण विजयेन । देवाधीना सन्ति तत्र बन्दीकृतस्य तत्प्रान्ताधिपस्य प्राणा ।

शिवराज —सद्यस्ते कारागृहाद्विमुच्य यथार्होपचारैश्च सभाज्य विसर्जय ।

आबाजी —यद्देव आज्ञापयति । अपि च महाराजायोपायनी-कर्तुमानीतमेतदलोकसाधारणं स्त्रीरत्नम् । तत्स्वीकृत्यानुगृह्णातिमम दासजनम् ।

शिवराज —(सरोषम्) अरे किमिदं त्वयाऽनार्यमनुष्ठितम् ।

तपन कुलभवस्य धर्मवृत्तेः रपि परदाररतिर्विभाव्यते किम् ।<br>
विषममुपगतोऽपि राजहंस, किमु बकवृत्तिमुपाश्रयेत् कदाचित् ॥६

---

(उसके पश्चात् कल्याण प्रान्त के अधिपति अपनी पुत्रवधू सहित प्रवेश करते हैं )

आबाजी—कल्याण विजय से आपकी वृद्धि हो। प्रान्ताधिपति जो बन्दीगृह में हैं, उनके प्राण आपके अधीन हैं ।

शिवराज—तुरन्त कारागार से बाहर कर, यथोचित सम्मान के साथ छोड़ दो ।

आबाजी—जैसी देव की आज्ञा । मैं महाराज को भेंट करने के लिए एक अलौकिक स्त्रीरत्न लाया हूँ। उसे स्वीकार कर इस दास को अनुगृहीत करें ।

शिवराज— ( क्रोध से ) अरे, यह तुमने क्या करडाला ।

क्या सूर्यकुल में उत्पन्न व्यक्ति, जो सदा धर्माचरण में प्रवृत्त रहता है, कभी परस्त्री में प्रवृत्त होगा ? क्या राजहंस विषम परिस्थिति आने पर भी बगुले की वृत्ति का आश्रय कभी ले सकता है । ६

( मन्त्रिणं प्रति ) उद्‌घुष्यतां तारस्वरेणास्मद्धर्मराज्ये शिवराजस्य तद्भृत्यानां च दुहितृनिर्विशेषाः परस्त्रियः ।

मन्त्री—यथाज्ञापयति महाराज । ( इति पत्रं निवेदयति )

आबाजी—प्रसीदतु देव । साम्प्रतं राजकुलसाधारणोऽयमुपचार इति कृत्वा मयाऽत्र प्रवृत्तम् । तदनुकम्पनीयोऽयं दासजनः ।

शिवराज—तव विनयेन परितुष्टोऽहमद्य त्वां कल्याणप्रान्ताधिपत्ये नियुनज्मि । तन्न्यायेन प्रजाः पालयंस्तदस्माकं धर्मचक्रं प्रवर्तय ।

आबाजी—यथाज्ञापयति देव । ( इति प्रान्ताधिपस्नुषया सह निष्क्रान्तः )

द्वारपाल—(प्रविश्य) विजयतां देव । सप्तशतं पाठान सैनिकाः महाराजस्य विजययशोभिः समाकृष्टा बीजापुरेशमपहाय महाराजाश्रयम् इच्छन्ति । अत्र देव प्रमाणम् ।

---

( मंत्री से ) तीव्र ध्वनि में घोषणा करो कि हमारे धर्मराज्य में शिवराज तथा उसके सेवक दूसरों की स्त्रियों को अपनी कन्या के समान समझते हैं ।

मंत्री—महाराज की जो आज्ञा ।

आबाजी—देव, प्रसन्न हों । मैं राजकुलोचित साधारण परम्परा को पूर्ण करके यहाँ आया हूँ । अब इस दास पर कृपा करें ।

शिवराज—तुम्हारे विनय से सन्तुष्ट होकर हम तुमको कल्याण प्रान्त का अधिपति नियुक्त करते हैं । इसलिए न्यायपूर्वक प्रजा का पालन करते हुए हमारे धर्मराज्य की स्थापना करो ।

आबाजी—देव जैसी आज्ञा दें । ( प्रान्ताधिपति की बहू के साथ जाता है । )

द्वारपाल—(प्रवेश कर) विजय हो, देव । महाराज, आपकी यशस्वी विजयों से आकर्षित होकर, सात सौ पठान सैनिकों ने बीजापुर नरेश को त्याग दिया है और वे आपका आश्रय चाहते हैं । इसका निर्णय करेंगे ।

शिवराज :—मन्त्रिन् कथमेते विश्वसनीयाः ।

प्रत्यर्थिनि परिजनेऽतितरां विनीते,
स्त्रैणे मृषोक्ति परमे विषयप्रसक्ते ।
धर्मध्वजे द्विषति हीनकुलोद्भवे च,
विश्वस्य नाशमुपयाति पुरन्दरोऽपि ॥७

मन्त्री —महाराज मन्त्राधिकारनियोगपरोऽयं परामर्शः । सैनिकानां तु नास्ति कश्चन स्वतन्त्रोऽधिकारः । तन्नोचितोऽत्र प्रतिषेधः । अप चैते परधर्मिण इति कृत्वाऽपि न युक्तः प्रतिषेधः । यतः

विभिन्नधर्मा नृपतिर्निजाः प्रजाः, समत्वमास्थाय सदैव पालयेत् ।
स्वधर्मनिन्दापरस्तु हेलया, प्रजाविरोधात् प्रबलोऽपि हीयते ॥८

शिवराज —सत्यं समदृष्ट्यधीनैव साम्राज्यप्रतिष्ठा । (द्वारपालं प्रति ) सद्धयतां मद्वचनात्सेनापतिर्यथावदेतेषां नियोगाय ।

---

शिवराज—मन्त्रिन्, इन पर विश्वास कैसे किया जाय ?

शत्रु, परिजन, ( भृत्य वर्ग ) के प्रति अत्यन्त विनीत, स्त्रैण, असत्य भाषण, विषयों में आसक्त, पाखण्डी, शत्रु और निम्नकुलोद्भूत जन में विश्वास करने पर इन्द्र तक सर्वनाश को प्राप्त हो सकता है । ७

मन्त्री—मन्त्रियों के साथ बैठकर हम इस पर विचार करेंगे । सैनिकों का तो कोई स्वतन्त्र अधिकार नहीं है । तथापि उनकी प्रार्थना अस्वीकार करनी अनुचित है । उन्हें पर धर्मी समझकर भी प्रतिरोध करना ठीक नहीं है । क्योंकि—

राजा को चाहिए कि वह अपनी प्रजा का पालन विभिन्न धर्मों का ध्यान रखते हुए समानभाव से करे । स्वधर्म का तिरस्कार करने वाला प्रबल भी राजा प्रजा के विरोध के कारण नष्ट हो जाता है ।८

शिवराज—सत्य ही है, समानभाव की ही बुद्धि से साम्राज्य की प्रतिष्ठा होती है । ( द्वारपाल से ) सेनापति को मेरा आदेश सुनाओ कि सबको गुणानुसार मेरी सेवा में उपस्थित करें ।

द्वारपाल —तथा। ( इति निष्क्रान्त )

शिवराज —मन्त्रिन्, नास्ति पर्याप्त केवल पदातिवल प्रबला-रातिनिग्रहाय। तदस्माभिः शीघ्रं सादिवलमभ्युपकल्पनीयम्

मन्त्री —देव, नेताजीवीराधिष्ठितं सादिवलमचिरेणैव भविष्यति रणायसारक्षमम्। तद्राजमाचीतो यदाऽसौ प्रत्यागच्छेत्तदाऽस्मिन्नेव कार्ये नियोजनीय।

शिवराज —त्वंयाऽभिमन्यते तवाप्यवसाय।

द्वारपाल—(प्रविश्य) विजयतां देव। एष राजमाचीतः प्रत्यागतो नेताजीवीरो द्वारि तिष्ठति।

शिवराज —प्रवेशयैनम्।

द्वारपाल—तथा (इति निष्क्रान्त)

नेताजी —(प्रविश्य) विजयतां देव। इयौवलच्छद्मभागन्त प्रवि-

---

द्वारपाल—जो आज्ञा। (चला जाता है।)

शिवराज—मन्त्रिन्, प्रबल शत्रु के दमन के लिए केवल पैदल सेना पर्याप्त नहीं है। इसलिए शीघ्र हमें रथसैन्य भी सगठित करना चाहिए।

मंत्री—देव, वीरवर नेताजी के नेतृत्व में शीघ्र ही सेना रणभूमि मे उतरने के लिए समर्थ होगी। अतएव जैसे ही वह राजमाची से वापस हो उन्हें इसी कार्य के लिए नियुक्त कर दिया जाय।

शिवराज—तुम्हारे निर्णय से सर्वथा सहमत हूँ।

द्वारपाल—(प्रवेश कर) विजय हो देव। राजमाची से लौटकर आये नेताजी द्वार पर स्थित हैं।

शिवराज—ले आओ उन्हें।

द्वारपाल—जो आज्ञा। (चला जाता है)

नेताजी—(प्रवेश कर) देव की विजय हो। यद्यपि मैं मेरे गुप-

ष्टेन गूढचरेण निशीथेऽधः प्रसारितां रज्जुमवलम्ब्य प्राकारमधिरू-ढैरस्मत्सैनिकगणैर्निहता राजमाच्युपरोधकारिणो यवनसैनिकाः।

शिवराजः—वीर प्रशंसनीयं खलु तवैतत्साहसविक्रान्तम्। अपि परितोष्यते यथार्होपचारेण त्वया बन्दीकृतो यवनेशश्यालः।

नेताजीः—अथ किम्। को नु खलु महाराज शासनमतिक्रमितुं प्रभवति। देव तत्र निरुद्धाः सन्त्यद्याप्येते युद्धगृहीता यवन सैनिकाः।

शिवराजः—मंत्रिन् आदिश राजमाच्यधिकृतं तान् विसर्जयितुम्।

मन्त्री—यदाज्ञापयति देवः। (इति पत्रे निवेशयति)

शिवराजः—वीर प्रत्यासन्न एवापरः सङ्ग्रामः। तत्सेनाऽपि सावि-निवहान्।

नेताजीः—यद्देव आज्ञापयति। (इति निष्क्रान्तः)

---

चर ने किसान के वेश में पहुँचकर रस्सी लटका दिया जिसके सहारे हमारे सैनिकों ने राजमाची में प्रवेश कर दुर्ग के अवरोधक यवन सैनिकों को मार डाला।

शिवराज—वीर तुम्हारा यह साहस और शौर्य प्रशंसनीय है। क्या बीजापुर नरेश का श्याल, जो तुम्हारा बन्दी है व्यवहार से सन्तुष्ट है।

नेताजी—जी हाँ। किसमें साहस है, जो महाराज के शासन की अवहेलना करें। देव अभी भी तो युद्ध के बन्दी यवन सैनिक हैं।

शिवराज—मन्त्रिन्, राजमाची के रक्षक को उन्हें मुक्त करने का आदेश करो।

मंत्री—जैसी देव की आज्ञा। (कागज पर लिखता है।)

शिवराज—वीर दूसरा संग्राम भी सन्निकट है। इसलिए रण सैन्य तैयार कर लो।

नेताजी—जैसी देव की आज्ञा। (चला जाता है)

चरः—(प्रविश्य) देवस्य स्वातंत्र्यनिष्ठया संरब्धेन दुरात्मना बीजापुराधीशेन कारागारे निरुद्धास्तातपादाः । (इति निष्कान्त)

शिवराजः—(सरोषम्) अरे दुर्मदान्ध, अपि सन्निष्ठया विहिताया स्ते सपर्याया ईदृशः परिणामः । अथवा कृतोपकारेभ्य एव द्रुह्यन्ति दुरात्मनः ।

विहाय कान्ता सुतबन्धुवर्गान्, कुलप्रतिष्ठामथ जीवितस्पृहाम् ।
हन्त्येकमत्याऽपि निषेवितोऽधमः, पर्याप्तकामः स्वयमेव सेवकम् ॥९

मंत्रीः—सर्वनाशमनाश एवाधम शुश्रूषायाः पारितोषिकम् ।

शिवराजः—मंत्रिन्, कथमपि रक्षणीया पितृचरणाः । यतः

राज्ञः प्रजायाः परिपालनं यथा, भृत्यस्य भर्तुर्हित साधनम् च ।
कुलस्त्रियः पत्युरथानुवर्तनं, तथा सुतस्यास्ति गुरोरुपासनम् ॥१०

---

चर—(प्रवेश कर) देव के हृदय मे स्वातंत्र्य निष्ठा हो जाने के कारण दुरात्मा बीजापुर नरेश ने आपके पिताजी को कारागार मे छोड़ दिया है। (चला जाता है)

शिवराज—(क्रोध से) अरे दुर्मदान्ध, क्या तुम सबकी निष्ठा का यही परिणाम है ? अथवा उपकार करने वाले से ही दुरात्मा पुरुष द्रोह करते हैं।

स्त्री, पुत्र, बन्धु–बान्धवों, कुल–मर्यादा और प्राणों तक का मोह त्याग कर सेवा करने वाले सेवक को भी (अधम व्यक्ति) अपना कार्य पूर्ण हो जाने पर मार डालते हैं ॥९

मंत्री—अधम व्यक्ति की सेवा का पुरस्कार सर्वनाश है।

शिवराज—मन्त्रिन्, पितृचरण की किसी भी प्रकार रक्षा होनी चाहिए। क्योंकि—

जैसे राजा द्वारा प्रजा का पालन करना परम कर्तव्य है, सेवक का कर्तव्य स्वामी का हित साधन करना, कुलीन स्त्री का कर्तव्य पति की आज्ञा मानना है तथैव पुत्र का कर्तव्य है गुरु (पिता) की उपासना करना ॥१०

